# मीनाक्षी स्तोत्रम्

*श्री शङ्कराचार्य कृतम्*

श्रीविद्ये शिववामभागनिलये श्रीराजराजार्चिते
श्रीनाथादिगुरुस्वरूपविभवे चिन्तामणीपीठिके ।
श्री वाणीगिरिजानुताङ्घ्रिकमले श्रीशाम्भवि श्रीशिवे
मध्याह्ने मलयध्वजाधिपसुते मां पाहि मीनाम्बिके ॥ 1 ॥

चक्रस्थेऽचपले चराचरजगन्नाथे जगत्पूजिते
आर्तालीवरदे नताभयकरे वक्षोजभारान्विते ।
विद्ये वेदकलापमौलिविदिते विद्युल्लताविग्रहे
मातः पूर्णसुधारसार्द्रहृदये मां पाहि मीनाम्बिके ॥ 2 ॥

कोटिराङ्गदरत्नकुण्डलधरे कोदण्डबाणाञ्चिते
कोकाकारकुचद्वयोपरिलसत्प्रालम्बिहाराञ्चिते ।
शिञ्जन्नूपुरपादसारमणिश्रीपादुकालङ्कृते
मद्दारिद्र्य् भुजङ्गारुडखगे मां पाहि मीनाम्बिके ॥ 3 ॥

ब्रह्मेशाच्युत गीयमानचरिते प्रेतासनान्तःस्थिते
पाशोदङ्कुशचापबाणकलिते बालेन्दुचूडाञ्चिते ।
बाले बालकुरङ्गलोलनयने बालार्ककोट्युज्ज्वले
मुद्राराधितदेवते मुनिनुते मां पाहि मीनाम्बिके ॥ 4 ॥

गन्धर्वामरयक्षपन्नगनुते गङ्गाधरालिङ्गिते
गायत्रीगरुडासने कमलजे सुश्यामले सुस्थिते ।
खातीते खलदारुपावकशिखे खद्योतकोट्युज्ज्वले
मन्त्राराधितदेवते मुनिनुते मां पाहि मीनाम्बिके ॥ 5 ॥

नादे नारदतुम्बुराद्यविनुते नादान्तनादात्मिके
नित्ये नीललतात्मिके निरुपमे नीवारशूकोपमे ।
कान्ते कामकले कदम्बनिलये कामेश्वराङ्कस्थिते
मद्विद्ये मदभीष्टकल्पलतिके मां पाहि मीनाम्बिके ॥ 6 ॥

वीणानादनिमीलितार्धनयने विस्रस्तचूलीभरे
ताम्बूलारुणपल्लवाधरयुते ताटङ्कहारान्विते ।
श्यामे चन्द्रकलावतंसकलिते कस्तुरिकाफालके
पूर्णे पूर्णकलाभिरामवदने मां पाहि मीनाम्बिके ॥ 7 ॥

शब्दब्रह्ममयी चराचरमयी ज्योतिर्मयी वाङ्मयी
नित्यानन्दमयी निरञ्जनमयी तत्त्वंमयी चिन्मयी ।
तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी
सर्वेश्वर्यमयी सदाशिवमयी मां पाहि मीनाम्बिके ॥ 8 ॥